गन्धपुष्पादिभिः अग्निं सम्पूजयेत् । आग्नेये, ॐ ब्रह्मणे नमः। नैर्ऋत्ये, ॐ पौष्टिकाय नमः । वायव्ये, ॐ बलवर्द्धनाय नमः । ईशाने, ॐ प्रजापतये नमः । मध्ये, ॐ विष्णवे नमः ।

अब अग्निको र दिशाहरूको पूजा गर्नू ।

वायव्यसंहितायाम्-

लौकिके पावको ह्यग्निः प्रथमः परिकीर्तितः । अग्निश्च मारुतो नाम गर्भाधाने विधीयते।।
तथा पुंसवने चैव शुभे कर्मणि शोभनः । सीमन्ते मङ्गलो नाम प्रगल्भे जातकर्मणि ।।
नाम्नि वै पार्थिवो वह्निः प्राशने शुचयः स्मृताः । सभ्यनामाथ चूडायां व्रतदाने समुद्भवः।।
वेदारम्भे हरिर्नाम राजपुत्रः समावृतौ । गोदाने सूर्यनामा च केशान्ते ह्यग्निरुच्यते ।।
वैश्वानरो विसर्गे तु विवाहे योजकस्तथा । चतुर्थ्यां तु शिखीनाम धृतिरग्निस्तु सामनी ।।
लक्षहोमे वह्निनामा कोटिहोमे हुताशनः । प्रायश्चित्ते विधिर्नाम पाकयज्ञे तु साहसः ।।
पूर्णाहुत्यां मृडोनाम शान्तिके दारुणस्तथा । पौष्टिके बलदश्चैव क्रोधाग्निश्चाभिचारिके।।
वश्यर्थे कामदो नाम वनदाहे तु बर्धनः । आवसन्थ्ये भवेदग्निर्होमे तु सम्प्रदायकः ।।
क्रव्यादो मृतभक्षी च समुद्रे बडवानलः । युगान्ते संक्षयो नाम संवर्तः प्रलये स्मृतः ।।

ब्राह्मणवरणम्- कुशतिलयवजलयुतगन्धपुष्पाक्षतताम्बूल-पूगीफल-वस्त्र-द्रव्याभरणादीन्यादाय पूर्वाभिमुखो भूत्वा प्रत्यङ्मुखान् ब्राह्मणान् निमन्त्रयेत्-

सङ्कल्पः-ॐ तत्सत् ३ ॐ विष्णुः ३ अद्य श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्तमानस्य सकलजगत्सृष्टिकारिणो श्रीब्रह्मणो द्वितीयपरार्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे युगे प्रह्लादाधिपत्ये मनौ सप्तमे सत्यत्रेताद्वापरान्ते कलौ कलियुगस्य प्रथमचरणे जम्बूद्वीपे भरतखण्डे आर्यावर्तान्तर्गते अमुकदेशे अमुकग्रामे अमुकनदीतीर्थादिसन्निधौ अमुकस्थाने इह पुण्यभूमौ षष्टिसंवत्सराणां मध्ये अमुकनामसंवत्सरे श्रीसूर्ये अमुकायनगते अमुकऋतौ मासानामुत्तमे अमुकमासे अमुकपक्षे

अमुकवासरान्वितायाम् अमुकतिथौ यथानाम-नक्षत्र-योग-लग्न-करण-मुहूर्तान्वितायाम् अमुकराशिस्थिते श्रीसूर्येअमुकराशिस्थिते चन्द्रमसि अमुकराशिस्थिते देवगुरौ अन्येषु ग्रहेषु यथायथास्थानस्थितेषु सत्सु एवं ग्रहगुणविशेषेण विशिष्टायाम् अद्येह अमुकगोत्रः अमुकप्रवरः अमुकनामा अहं ममास्मिन् यावत्कर्मणो निर्विघ्नपरिसमाप्त्यर्थं दीपकलशगणेशपूजनपूर्वकं क्रियमाणे अमुककर्मणि कृताकृतावेक्षणरूप ब्रह्मकर्मकर्तुं तथा तद्तद्विहितोपयोग्याचारकर्म कर्तुं च प्रतिदेवतामुखे साज्यभागान्तमाहवनीयद्रव्ययुतहोमकर्म कर्तुं चतुर्वेदोक्तमन्त्रजपपाठकर्म कर्तुं च नानानामगोत्रान् नानानामशर्मणो ब्राह्मणान् एभिश्चन्दनपुष्पाक्षत-ताम्बूलपूगीफलवासोद्रव्याभरणादिभिर्गणपतिहोत्राचार्यत्वेन जापकपाठक-त्वेन च युष्मान् अहं वृणे ।

ब्राह्मणाः -ॐ वृताः स्मः ।

अब ब्राह्मण वरणमा जौ-तिल-कुश, चन्दन, सुपारी, वस्त्र, द्रव्यादि राखेर आफू पूर्वतिर फर्किई ब्राह्मणहरूलाई पश्चिम मुख राखेर संकल्प गर्नू ।

आचार्य प्रार्थना-

आचार्य त्वं यथा स्वर्गे शक्रादीनां वृहस्पतिः । तथा त्वं मम यज्ञेऽस्मिन् आचार्यो भव सुव्रत ।।

ब्रह्म-प्रार्थना-

यथा चतुर्मुखो ब्रह्मा सर्ववेदविशारदः । तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तम।।

होतृ-प्रार्थना-

भगवन् सर्वधर्मज्ञ सर्वधर्मविदांवर । वितते मम यज्ञेऽस्मिन् ऋत्विक् त्वं मे मखे भव ।।

पूर्वे ऋग्वेदपारायणार्थम् -

ऋग्वेदः पद्मपत्राक्षो गायत्री सोमदैवतः । अत्रिगोत्रस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव।।

दक्षिणे यजुः पारायणार्थम्-

कालराक्षो यजुर्वेदस्त्रैष्टुभो विष्णुदैवतः । काश्यपेयस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव।।

पश्चिमे सामपारायणार्थम्-

सामवेदस्तु पिङ्गाक्षो जाग्रतः शक्रदैवतः । भारद्वाजस्तु विप्रेन्द्र ऋत्विक् त्वं मे मखे भव।।

उत्तरे अथर्वपारायणार्थम्-

बृहन्नेत्रोऽथर्ववेदोऽनुष्टुभो रुद्रदैवतः । वैशम्पायन विप्रेन्द्र ऋत्विक् त्वं मे मखे भव ।।

अमुककर्मणि अमुकदेवताया अमुकमन्त्रजपकर्मकर्तुं युष्मानहं वृणे ।

ततो ब्राह्मणान् मधुपर्कादिना सम्पूज्य प्रार्थयेत्-

अनि आचार्य, ब्रह्मा, होता र चारै दिशामा चार वेद पाठ गर्नेहरूको पनि यथाक्रम हात जोरेर प्रार्थना गर्नू ।

ब्राह्मणाः सन्तु मे शस्ताः पापात् पान्तु समाहिता । वेदानां चैव दातारः पातारः सर्वदेहिनाम्।।

जपयज्ञैस्तथा दानैर्होमैश्च विविधैः पुनः । देवानां च पितॄणां च तृप्त्यर्थं याजकाः कृताः ।।

येषां देहे स्थिता वेदाः पावयन्ति जगत्त्रयम् । रक्षन्तु सततं येऽस्मान् जपयज्ञे व्यवस्थिताः ।।

ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम् । येषाँ वाक्यामृतेनैव शुध्यन्ति मलिना जनाः ।।

पावनाः सर्ववर्णानां ब्राह्मणा ब्रह्मरूपिणः । सर्वकर्मरता नित्यं वेदशास्त्रार्थकोविदाः ।।
श्रोत्रियाः सत्यवाचश्च वेदध्यानरताः सदा । यद्वाक्यामृतसंसिक्ता ऋद्धिं यान्ति नरद्रुमाः।।
अङ्गीकुर्वन्तु कर्मैतत् कल्पद्रुमसमाः स्थिताः । यथोक्तनियमैर्युक्ता मन्त्रार्थे स्थिरबुद्धयः ।।
यत्कृपालोचनात् सर्वा ऋद्धयो बृद्धिमाप्नुयुः । मम यज्ञे सदा पूज्याः सन्तु वै नियमान्विताः।।
अक्रोधनाः शौचपरा सततं ब्रह्मवादिनः । ब्रह्मध्यानरता नित्यं प्रसन्नमनसः सदा ।।
अदुष्टभाषिणः सन्तु मा सन्तु परनिन्दकाः । ममापि नियमा ह्येते भवन्तु भवतामपि ।।

पुण्याहवाचनम्- गन्धपुष्पाक्षतताम्बूलपूगीफलद्रव्यवस्त्रादिभिस्त्रींश्चतुरः पञ्च वा ब्राह्मणान् सम्पूज्य हस्ते फलादिकं गृहीत्वा-ॐ अद्येहाऽमुकगोत्रोऽ मुकप्रवरोऽमुकनामाहं ममामुककर्मणि पुण्याहवाचनार्थं नानानामगोत्रान् नानानामशर्मणो ब्राह्मणान् एभिश्चन्दनपुष्पाक्षतपूगीफलवासोद्रव्यादिभिर्युष्मान् वृणे ।

ॐ तत्सत् ३ ॐ विष्णुः ३ इत्यादि देशकालौ स्मृत्वा –ॐ अद्ये-हाऽमुकगोत्रस्यामुकनाम्नः मम गृहेऽमुककर्मणि भो ब्राह्मणाः पुण्याहं भवन्तो ब्रुवन्तु पुण्याहं भवन्तो ब्रुवन्तु पुण्याहं भवन्तो ब्रुवन्तु।

ते च– ॐ पुण्याहम् ॐ पुण्याहम् ॐ पुण्याहम् । ॐ पुनन्तुमादेव-जनाः पुनन्तुमनसाधियः ।। पुनन्तुविश्वाभूतानिजातवेदः पुनीहिमा ।।

पुनः पूर्ववत्– ॐ अद्येहेत्यादि मम गृहेऽमुककर्मणि भो ब्राह्मणाः स्वस्ति भवन्तो ब्रुवन्तु ३ । ॐ स्वस्ति ३ ॐ स्वस्तिनऽइन्द्रोवृद्धश्रवाः स्वस्तिनः पूषाविश्ववेदाः । स्वस्तिनस्ताक्ष्योंऽअरिष्टनेमिः स्वस्तिनो बृहस्पतिर्दधातु ।।

अद्येहेत्यादि मम गृहेऽमुककर्मणि भो ब्राह्मणाः ऋद्धिं भवन्तो ब्रुवन्तु ३

ॐ ऋद्ध्यन्ताम् ३ । ॐ सत्रस्यऽऋद्धिरस्यगन्मज्योतिरमृताऽअभूम।। दिवंपृथिव्याऽअध्यारुहामाविदामदेवान्त्स्वर्ज्ज्योतिः ।।

ॐ अद्येहेत्यादि मम गृहेऽमुककर्मणि भो ब्राह्मणाः वृद्धिं भवन्तो ब्रुवन्तु ३ ॐ वृद्ध्यन्ताम् ३। ॐ ज्यैष्ठ्यञ्चमऽआधिपत्यञ्चमेमन्युश्चमेभामश्च मेमश्चमेम्भश्चमेजेमाचमेमहिमाचमेवरिमा चमेप्रथिमाचमेवर्षिमा च मेद्राघिमाचमेवृद्धिश्चमेयज्ञेनकल्पन्ताम् ।।

ॐ अद्येह मम गृहेऽमुककर्मणि भो ब्राह्मणाः कल्याणं भवन्तो ब्रुवन्तु ३ । ॐ कल्याणम् ३ । ॐ यथेमांवाचङ्कल्याणीमावदानिजनेभ्यः ।। ब्रह्मराजन्याभ्याँशूद्रायचार्यायचस्वायचारणायच ।। प्रियोदेवानांदक्षिणायैदातुरिहभूयासमयम्मेकामः समृद्ध्यतामुपमादोनमतु।।

ॐ अद्येह मम गृहेऽमुककर्मणि भो ब्राह्मणाः शान्तिं भवन्तो ब्रुवन्तु ३। ॐ शान्तिः ३ । ॐ द्यौः शान्तिरन्तरिक्षँ शान्तिः पृथिवीशान्तिरापः शान्तिरोषधयः शान्तिः ।। वनस्पतयः शान्तिर्विश्वेदेवाः शान्तिर्ब्रह्म शान्तिः सर्व्वँ शान्तिः शान्तिरेव शान्तिः सामाशान्तिरेधि।।

ॐ अद्येह मम गृहेऽमुककर्मणि भो ब्राह्मणाः श्रियं भवन्तो ब्रुवन्तु ३ । ॐ श्रीः ३ ।। ॐ मनसः काममाकूतिंवाचः सत्यमशीय।। पशूनाँ रूपमन्नस्यरसोयशः श्रीः श्रयताम् ।।

ॐ मन्त्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः । शत्रुणां बुद्धिनाशोऽस्तु मित्राणामुदयोऽस्तु वः ।। भद्रमस्तु शिवं चास्तु महालक्ष्मीः प्रसीदतु । रक्षन्तु त्वां सदा देवा आशिषः सन्तु सर्वदा।।

पुण्याहवाचनसमृद्धिरस्तु ॥

अब पुण्याहवाचनमा चन्दन, अक्षता, फूल, सुपारी, द्रव्य, वस्त्रादिले तीन, चार अथवा पाँच ब्राह्मणहरूलाई पूजा गरेर दिनू, अनि हातमा कुनै फल लिएर हात जोर्नु । पुरोहितले संकल्प र मन्त्र मूल अनुसार भन्दै जानू । 'अमुक कर्मणि' भनेको स्थानमा जुन कामको लागि हवन गरिदैछ, त्यसैको उच्चारण गर्दै जानू । 'समृद्धिरस्तु' भनेपछि फूल-अक्षता र सुपारी यजमानलाई दिनू ।

दीपपूजनं प्रज्वालनम्- ॐ स्थिरोभववीड्वङ्गऽआशुर्भववाज्यर्वन् ॥ पृथुर्भवसुखदस्त्वमग्नेः पुरीषवाहणः ॥

यस मन्त्रले बत्ती बाल्नू ।

आवाहनम्- ॐ दीपनारायण इह आगच्छ इह तिष्ठ मम पूजां गृहाण । ॐ दीपनारायणाय नमः ॥

यस मन्त्रले आवाहन गर्नू ।

चन्दनाक्षतादिभिः पूजनम्-ॐ पृष्ठोदिविपृष्ठोऽअग्निःपृष्ठोपृथिव्यां पृष्ठोविश्वाऽओषधीराविवेश ॥ वैश्वानरः सहसापृष्ठोऽअग्निः सनोदिवा-सरिषस्पातुनक्तम् ॥

यस मन्त्रले बत्तीको पूजा गर्नू ।

प्रार्थना- नमोऽस्त्वनन्ताय सहस्रमूर्तये सहस्रपादाक्षिशिरोरुवाहवे ।
सहस्रनाम्ने पुरुषाय शाश्वते सहस्रकोटी युगधारिणे नमः ॥
नमः कमलनाभाय नमस्ते जलशायिने । नमस्ते केशवानन्त वासुदेव नमोऽस्तु ते ॥
वासनाद्वासुदेवस्य वासितं भुवनत्रयम् । सर्वभूतनिवासोऽसि वासुदेव नमोऽस्तुते ॥
शुभं भवतु कल्याणमारोग्यं सुखसम्पदः । सर्वदुःखविनाशाय दीपज्योतिर्नमोऽस्तु ते ॥

यी मन्त्रहरूले बत्तीको प्रार्थना गर्नू ।

कलशस्थापनम्- ईशानदिग्भागे अब्रणं दध्यक्षतादिभूषितं तैजसं मृण्मयं वा कलशं धान्योपरि स्थापयेत् ।

अब ईशानतिर दही-अक्षतादिले सिंगारेको धातु वा माटोको कलश धानमाथि राख्नू ।

भूमिशोधनम्-ॐ भूरसिभूमिरस्यदितिरसिविश्वधायाविश्वस्य भुवनस्य धर्त्री । पृथिवींयच्छपृथिवीन्दृꣳ हपृथिवीम्माहिꣳ सीः ॥

यस मन्त्रले भूमि-शोधन गर्नू ।

धान्यस्थापनम्-ॐ धान्यमसिधिनुहिदेवान् प्राणायत्वोदानायत्वाव्यानाय त्वा ॥ दीर्घामनुप्रसितिमायुषेधान्देवोवः सविताहिरण्यपाणिः प्रति गृभ्ण्णात्वच्छिद्रेणपाणिनाचक्षुषेत्वामहीनाम्पयोसि ॥

यस मन्त्रले धान्य स्थापन गर्नू ।

कलशस्थापनम्-ॐ आजिघ्रकलशम्मह्यात्वाविशन्त्विन्दवः ॥
पुनरूर्ज्जानिवर्तस्वसानः सहस्रन्धुक्ष्वोरुधारापयस्वतीः पुनर्म्माविशाताद्रयिः॥

यस मन्त्रले धानको टपरीमाथि कलश थाप्नू ।

तीर्थादिजलम्- ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्क्कम्भसर्ज्जनीस्थो
वरुणस्यऽऋतसदन्यसिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद॥
ॐ इमम्मेवरुणश्रुधीहवमद्‌य्याचमृडय ॥ त्वामवस्युराचके ॥

यस मन्त्रले कलशमा तीर्थहरूको जल चढाउनू ।

गङ्गे च यमुने चैव गोदावरि सरस्वति! नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ॥

सर्वौषधीः- ॐ याऽओषधीः पूर्वाजातादेवेब्भ्यस्त्रियुगं पुरा ॥
मनैनुबब्भ्रूणामहꣳ शतन्धामानिसप्तच ॥

यस मन्त्रले कलशमा सर्वौषधी चढाउनू ।

पञ्चरत्नानि–हिरण्यगर्भः समवर्त्तताग्रेभूतस्यजातः पतिरेकऽआ-
सीत् ।। सदाधारपृथिवीन्द्यामुतेमाङ्कस्मैदेवायहविषाविधेम ।।

यस मन्त्रले कलशमा पंचरत्न चढाउनू ।

पूगीफलादीनि – ॐ याः फलिनीर्याऽअफलाऽअपुष्पायाश्चपुष्पिणी।।
बृहस्पतिप्रसूतास्तानोमुञ्चन्त्वꣳ हसः ।।

यस मन्त्रले कलशमा सुपारी चढाउनू ।

यवान्- ओषधयः समवदन्तसोमेनसहराज्ञा ।।
यस्मैकृणोतिब्राह्मणस्तꣳ राजन्पारयामसि

ॐ यवोसियवयास्मद्द्वेषोयवयारातीर्दिवेत्वान्तरिक्षायत्वापृथिव्यैत्वा०

यस मन्त्रले कलशमा जौ चढाउनू ।

गन्धम्-ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टांकरीषिणीम् ॥
ईश्वरीं सर्वभूतानां तामिहोपह्वयेश्रियम् ॥
यस मन्त्रले कलशमा चन्दन चढाउनू ।
दूर्वा- ॐ काण्डात्काण्डात्प्ररोहन्तीपरुषः परुषस्परि ॥
एवानोदूर्वेप्रतनुसहस्रेणशतेनच ॥
यस मन्त्रले कलशमा दूवो चढ़ाउनू ।
सप्तमृदः- ॐ स्योनापृथिवीनोभवानृक्षरानिवेशनी । यच्छानः शर्म्मसप्रथाः ।
यस मन्त्रले कलशमा सप्तमृत्तिका (सात स्थानको माटो) चढाउनू ।
पञ्चपल्लवैस्तन्मुखमाच्छादनम्-ॐ अश्वत्थेवोनिषदनंपर्णेवोवसतिष्कृता॥ गोभाजऽइत्किलासथयत्सनवथपूरुषम् ॥
यस मन्त्रले कलशमा पंचपल्लव चढाउनू ।

दध्यक्षतैर्भूषणम्-ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव। यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयꣳ स्यामपतयोरयीणाम् ॥

यस मन्त्रले कलशलाई दही-अक्षता आदिले सिंगार्नू ।

वस्त्रयुग्मेनवेष्टनम्-ॐ बृहस्पतेऽअतियदर्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु ॥ यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम्॥ उपयामगृहीतोसिबृहस्पतयेत्वैषतेयोनिर्बृहस्पतयेत्वा ॥

यस मन्त्रले कलशमा जोडा वस्त्र बेरिदिनू ।

आम्रपल्लवैस्तन्मुखमाच्छादनम्-ॐ अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन ॥ ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ॥

यस मन्त्रले कलशमा आँपको पात चढाउनू ।

वरुणमावाह्य पूजयेत्-ॐ तत्त्वायामिब्रह्मणावन्दमानस्तदासास्तेयजमानोहविर्भिः ।। अहेडमानोवरुणेहवोद्ध्युरुशᳪ समानऽआयुः प्रमोषीः।।

यस मन्त्रले कलशमा वरुणको आवाहन पूजा गर्नू ।

गङ्गादितीर्थान्यावाहयेत्-

ॐ सर्वे समुद्राः सरितस्तीर्थानि जलदाःनदाः । आयान्तु यजमानस्य दुरितक्षयकारकाः ।।

यस मन्त्रले कलशमा गङ्गादि तीर्थहरूको आवाहन र पूजा गर्नू ।

कलशं स्पृष्ट्वाभिमन्त्रयेत्-

ॐ कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः । मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः।।
कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुन्धरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदोऽप्यथर्वणः ।।
अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः ।।

अब कलशको चारैतिर छोएर मन्त्र पढ्दै जानू । अन्य चार कुनाका चार कलशमा चार समुद्रको पूजा गर्नू । यो विष्णु धर्मोत्तरको वचन हो ।

## प्रार्थना–

देवदानवसंवादे मध्यमाने महोधधौ । उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम् ।।
त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः।।
शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः । आदित्या वसवो रुद्रा विश्वेदेवाः सपितृकाः।।
त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः । त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव ।।
सान्निध्यं कुरु देवेश प्रसन्नो भव सर्वदा ।।

यी मन्त्रहरूले कलशको प्रार्थना गर्नू ।

**गणेशपूजनम्**–ॐ अद्येह मम अमुककर्मणि निर्विघ्नपरिसमाप्त्यर्थं कर्माङ्गतया श्रीगणेशपूजनमहं करिष्ये ।

अब गणेशजीको पूजामा पहिले तिल-कुश लिएर संकल्प गर्नू ।

**आवाहनम्**–ॐ गणानान्त्वागणपतिꣳ हवामहे प्रियाणान्त्वाप्रियपतिꣳ

हवामहे निधीनान्त्वानिधिपतिꣳ हवामहे व्वसोमम ।। आहमजानि गर्ब्भधमात्त्वमजासिगर्ब्भधम् ।।

हेहेरम्ब त्वमेह्येहि अम्बिका त्र्यम्बकात्मज । सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभयुतः शिवः ।।
नागस्य नागहारत्वं गणराज चतुर्भुज । भूषितैः स्वायुधैर्दिव्यैः पाशाङ्कुशपरश्वधैः।।
आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः । इहागत्य गृहाण स्वं पूजां कर्तुं च रक्ष माम्।।

ॐ भूर्भुवः स्वः गणपते सिद्धिबुद्धिसहितः सायुधः सवाहनः साङ्गः सपरिवार इह आगच्छ इह तिष्ठ मम (यजमानस्य) पूजां गृहाण यावत् पूजां करोमि तावत् त्वं सुस्थिरो भव सुप्रसन्नो भव वरदो भव ।

ॐ भूर्भुवः स्वः गणपते सिद्धिबुद्धिसहिताय सायुधाय सवाहनाय सपरिवाराय इदमासनं समर्पयामि । ॐ गणपतये नमः ।

यी मन्त्रहरूले गणेशजीको आवाहन गर्नू ।

**सहस्रशीर्षेत्यादि षोडशमन्त्रैः प्रतिऋग्भिः षोडशोपचारैः सम्पूजयेत्-**

'सहस्रशीर्षा०' इत्यादि मन्त्रहरूले शोषडोपचारले गणेशजीको पूजा गर्नू ।

**नारिकेलादिफलं सवस्त्रं पुरतः पात्रे निधाय स्तुतिं कृत्वाऽर्पयेत्-**

रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक । भक्तनामभयं कर्ता त्राता भव भवार्णवात् ॥
द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो । वरदस्त्वं वरं देहि वाञ्छितं वाञ्छितार्थद ॥
अनेन फलदानेन फलदोऽस्तु सदा मम ॥

वस्त्रसहित नरिवल आदि केही फूल पात्रमा राखेर गणेशजीको स्तुति गरी चढाउनू ।

**रक्षाबन्धनपूजनम्-दूर्वासर्षपचन्दनगोमयदधिसहितां रक्षां ताम्रपात्रे निधाय पात्रं स्पृशन् नारायणकवचं पठेत्-**

पूर्वे रक्षतु गोविन्द आग्नेय्यां धरणीधरः । याम्यां रक्षतु बाराहो नारसिंहस्तु नैर्ऋते ॥
बारुण्यां केशवो रशेत् वायव्यां मधुसूदनः । उत्तरे श्रीधरो रक्षेद् ऐशान्यां तु गदाधरः॥
ऊर्ध्वं गोवर्धनो रक्षेदधस्तात् तु महेश्वरः । एवं दशदिशो रक्षेद् वासुदेवो जनार्दनः ॥

यज्ञाग्रे रक्षताच्छङ्खः पृष्ठे वै पद्ममुत्तमम् । वामपार्श्वे गदा रक्षेत् दक्षिणे च सुदर्शनम्।।
उपेन्द्रः पातु ब्रह्माणमाचार्यं पातु वामनः । ऋग्वेदमच्युतो रक्षेद् यजुर्वेदमधोक्षजः ।।
कृष्णो रक्षतु सामानमथर्वाणं च माधवः । उपविष्टाँश्च विप्राँस्ताननिरुद्धोऽभिरक्षतु ।।
यजमानं सपत्नीकं पुण्डरीकाक्ष रक्षतु । रक्षाहीनं च यत् स्थानं तत्सर्वं रक्षताद् हरिः।।
वेदमन्त्रैस्तु कर्तव्या रक्षाशुभ्रैस्तु सर्षपैः । कृत्वा पोटलिकां पूर्वं बध्नीयाद् दक्षिणे करे।।

अब रक्षाबन्धन पूजामा दूबो, सरस्यूँ, चन्दन, गोबर र दही सहित रक्षा (डोरो) तामाको पात्रमा राखेर त्यो पात्रलाई छोई नारायण कवच पढ्नू ।

पूजयेत् -ॐ रक्षोहणंबलगहनंवैष्णवीमिदमहन्तंबलगमुत्किरामियम्मेसमानोयमसमा-नोवखानेदमहन्तंबलगमुत्किरामियम्मे सबन्धुर्यमसबन्धुर्निचखानेदमहन्तंबलगमुत्किरामियम्मे सजातोयमसजातोनिचखानोत्कृत्याङ्किरामि ।। ॐ स्वराडसिसपत्नहासत्रराडस्यभिमातिहा जनराडसि-रक्षोहासर्वराडस्यमित्रहा ।। ॐ रक्षोहणोवोब्बलगहनः प्प्रोक्षामिव्वैष्ष्णवान्त्रक्षोहणोबोब्बलगहनोवनयामिव्वैष्णवान्त्रक्षोहणो

वोब्बलगहनोवस्तृणामिव्वैष्णवान्न-क्षोहणौवांब्बलगहनउपदधामि व्वैष्णवीरक्षोहणौबलगहनौपर्यहामिव्वैष्णवीव्वैष्णवमसिव्वैष्णवाःस्त्थ।। ॐसप्तऽऋषयः प्रतिहताः शरीरेसप्तरक्षन्ति सदमप्रमादम् ।। सप्तापः स्वपतोलोकमीयस्तत्रजागृतोऽअस्वप्नजौसत्रसदौ च देवौ ।।

अब वेदका मन्त्रहरू पढ्दै रक्षा बन्धनको पूजा गर्नू ।

ततः क्रमेण नाममन्त्रैः चन्दनाक्षतपुष्पधूपदीपादिभिः यथामिलितोपचारैः कलशे पूजयेत्-ॐ गणपते इहागच्छ इह तिष्ठ गणपतिं आवाहयामि स्थापयामि पूजयामि ॐ गणपतये नमः । ॐ सूर्य इहागच्छ इह तिष्ठ सूर्यम् आवाहयामि स्थापयामि पूजयामि ॐ सूर्याय नमः ।

ॐ देव्यै नमः । ॐ शिवाय नमः । ॐ विष्णवे नमः । ॐ विनायकाय नमः । ॐ दुर्गाय नमः । ॐ वायवे नमः । ॐ

आकाशाय नमः । ॐ अश्विनीकुमाराभ्यां नमः । ॐ सूर्याय नमः। ॐ सोमाय नमः । ॐ भौमाय नमः । ॐ बुधाय नमः । ॐ बृहस्पतये नमः । ॐ शुक्राय नमः । ॐ शनये नमः । ॐ राहवे नमः। ॐ केतुभ्यो नमः । ॐ ईश्वराय नमः । ॐ उमाय नमः । ॐ स्कन्दाय नमः । ॐ हरये नमः । ॐ ब्रह्मणे नमः । ॐ इन्द्राय नमः। ॐ यमाय नमः। ॐ कालाय नमः ! ॐ चित्रगुप्ताय नमः । ॐ अग्नये नमः। ॐ अद्भ्यो नमः । ॐ भूम्यै नमः । ॐ विष्णवे नमः। ॐ इन्द्राय नमः। ॐ इन्द्राण्यै नमः । ॐ प्रजापतये नमः । ॐ सर्पाय नमः । ॐ ब्रह्मणे नमः । ॐ इन्द्राय नमः । ॐ अग्नये नमः। ॐ यमाय नमः। ॐ निर्ऋतये नमः । ॐ वरुणाय नमः। ॐ वायवे नमः। ॐ सोमाय नमः । ॐ ईशानाय नमः । ॐ ब्रह्मणे नमः । ॐ अनन्ताय

ध्रुवाद्यष्टवसुभ्यो नमः । ॐ धात्रादिद्वादशादित्येभ्यो नमः । ॐ वीरभद्राद्येकादशरुद्रेभ्यो नमः । ॐ गौर्यादिषोडशमातृभ्यो नमः। ॐ आवहादि सप्तमरुद्भ्यो नमः । ॐ विनायकाय नमः । ॐ ब्रह्मणे नमः । ॐ विष्णवे नमः । ॐ रुद्राय नमः । ॐ अर्काय नमः । ॐ वनस्पते इहागच्छ इह तिष्ठ वनस्पतिं आवाहयामि स्थापयामि पूजयामि ॐ वनस्पतये नमः ॥

अब नामानुसार क्रमले चन्दन, अक्षता, फूल, धूप-दीप, नैवेद्य आदिले कलशमा पूजा गर्नू । यसमा 'गणपतये नमः' देखि, 'वनस्पतये नमः' सम्मका देवताहरूको पूजा गर्नुपर्दछ ।

होमसङ्कल्पो यवतिलकुशकर्मपात्रजलेन-हरिः ॐ तत्सत् ३ विष्णुः ३ अद्येह अमुकगोत्रः अमुकप्रवरः अमुकनामा अहं मम अमुककर्मणि आघाराज्यभागपूर्वकपञ्चवारुणीहोमपूर्वकं प्रधानभूतेभ्यो

देवेभ्यो गणपत्यादिपञ्चायतनेभ्यो विनायकादिपञ्चलोकपालेभ्यः सूर्यादिन-
वग्रहेभ्यः ईश्वरादि-अधिदेवेभ्यः अग्न्यादिप्रत्यधिदेवेभ्यः इन्द्रादिदशदिक्पा-
लेभ्यो ध्रुवाद्यष्टवसुभ्यो धात्रादिद्वादशादित्येभ्यो वीरभद्राद्येकादशरुद्रेभ्यो
गौर्यादिषोडशमातृभ्यः आवहादिसप्तमरुद्भयः विनायक-ब्रह्म-विष्णु-
रुद्रार्कवनस्पतिभ्यः प्रधानदेवताभ्यस्तथा चतुः स्वस्तिभ्यः पयःपञ्चभ्यः
षड्विष्णुभ्यो द्वादशदेवताभ्यो द्वादशशान्तिभ्यः षट्प्रातर्भ्यः षड्वातेभ्यः
त्र्यनडुद्भ्यः पञ्चभगेभ्यः पञ्चेन्द्रियेभ्यः पञ्चवरुणेभ्यो गायत्र्यै सावित्र्यै
सरस्वत्यै गृहमात्रे अन्नपूर्णायै महालक्ष्म्यै महारिष्टविनाशिन्यै चण्ड्यै
मार्गदेवतायै (द्यौराल्यै) वास्तुदेवाय गोष्ठदेवतायै (गैडुदेवाय) क्षेत्रपालाय
ग्रामदेवाय स्वर्गेन्द्राय पातालवासुकिभ्यो मित्रलोकपालाय मान्धात्रे तीर्थ-
राजाय व्रतराजाय (पुनः) दिक्पालेभ्यः तिथिभ्यो नक्षत्रेभ्यो योगेभ्यो

वारेभ्यः करणेभ्यो वातेभ्यो मेघेभ्यः समुद्रेभ्यो नदीभ्यः इष्टदेवताभ्यः कुलदेवेभ्यः स्थापितदेवेभ्यो भैरवाय भैरव्यै विन्ध्यवासिन्यै स्थानविशेषाधिपतिदेवताभ्यः पञ्चपाण्डवेभ्यः पितृभ्यो वैश्वानराय उत्तराङ्ग भूर्भुवः स्वः अग्निवरुण-सवितृ-विष्णु-विश्वेदेवमरुत्स्वर्कप्रजापतिस्विष्टकृद्देवेभ्यः इदमाज्यादिहवनीयद्रव्यैर्यथासंख्यं ब्राह्मणद्वारा हवनं करिष्ये ॥

अब जौ-तिल-कुश र कर्मपात्रको जल लिएर होम संकल्प गर्नू ।

पवित्रेण प्रोक्षणीजलाभिमन्त्रणम्-ॐपृष्ठोदिविपृष्ठोऽअग्निः पृथिव्यांपृष्ठोविश्वाऽओषधीराविवेश ॥ वैश्वानरः सहसापृष्ठोऽअग्निः सनोदिवा सरिषस्पातुनक्तम् ॥

पवित्रले प्रोक्षणीपात्रको जल अभिमन्त्रित गर्नू ।

तज्जलेन दक्षिणतः अग्नेः पर्युक्षण-(सेचन) मन्त्रम्-ॐ सुसमिद्धाय शोचिषे घृतन्तीव्रंजुहोतन ।। अग्नये जातवेदसे ।।

त्यही प्रोक्षणीको जलले अग्निमा घुमाएर सेचन गरिदिनू ।

ततो उपयमनकुशान् वामहस्ते कृत्वोत्तिष्ठन् प्रजापतिं मनसा ध्यात्वा समिद्धतमेऽग्नौ इति पूर्वस्थापिता घृताक्ताः तिस्रः समिधः प्रक्षिप्य-ॐ समिधाग्निन्दुवस्यतघृतैर्बोधयतातिथिम् ।। आस्मिन्हव्याजुहोतन।।

अब उपयमन कुश बायाँ हातमा लिएर मनमनै प्रजापतिको ध्यान गरी पहिले राखिएको तीन टुक्रा समिधा घिउमा चोभेरआगोमा हालिदिनू ।

सपवित्रप्रोक्षण्युदकमादाय तज्जलेन प्रदक्षिणक्रमेणाग्निं पर्युक्ष्यततो प्रणीतापात्रे पवित्रे निधाय पातितदक्षिणजानुः कुशेन ब्रह्मणा-ऽन्वारब्धः समिद्धतमेऽग्नौ स्रुवेणाऽऽज्याहुतिंजुहोति तत्राधारादारभ्य

द्वादशहुतियुतत्तदाहुत्यन्तरं स्रुवावस्थितहुतशेषघृतस्य प्रोक्षणीपात्रे प्रक्षेपः[१]-

अब पवित्र सहित प्रोक्षणीको जलले अग्निको प्रदक्षिणा गर्नू । अनि प्रणीता पात्रमा पवित्र राखेर बायाँ घुँडा मोरी कुशले ब्रह्माको स्पर्श गर्नू । अनि सुरोले केवल घिउको आहुति दिनू । यी बाह्र आहुतिमा सुरोको टुप्पामा स्थित घिउ प्रोक्षणी पात्रमा चोभिदिनू ।

ॐ प्रजापतय इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः प्रजापतिर्देवता आज्यहोमे विनियोगः । ॐ प्रजापतये स्वाहा इदं प्रजापतये न मम। -इति मनसा ।

यस मन्त्रले प्रजापतिलाई घिउको आहुति दिनू ।

---

१- वह्नेः प्रदीप्तज्वालायां जुहुयान्नान्यथा चरेत् । काष्ठे घूमेऽल्पज्वालायां भस्मनि दोषमाप्नुयात्।।
यत्र प्रज्वलितो वह्निस्तन्मुखं जातवेदसः । धृतधारां ततो दद्यात् यावत् स्विन्नो भवेच्चरुः।।
आस्यान्तर्जुहुयाद्वह्नेः पण्डितः सर्वकर्मसु । बधिरत्वं कर्णहोमे नेत्रे त्वन्धत्वमाप्नुयात्।।
नासिकायां मनः पीडा शिरोहोमे तु मृत्युदः ।।
यतः काष्ठं ततः श्रोत्रं यतो घूमोऽथ नासिका । यतोऽल्पज्वलनं नेत्रं यतो भस्मस्ततःशिरः।।

ॐ इन्द्रायेति प्रजापतिर्ऋषि स्त्रिष्टुप्छन्दः इन्द्रो देवता आज्यहोमे विनियोगः ॐ इन्द्राय स्वाहा इदमिन्द्राय न मम । –इत्याधारौ ।

यस मन्त्रले इन्द्रलाई आहुति दिनू । घिउ चुहाउँदै लगेर अग्निमा दिइने आहुतिलाई 'आधार' भन्दछन् ।

ॐ अग्नये इति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता आज्यहोमे विनियोगः। ॐ अग्नये स्वाहा इदमग्नयेन मम। प्रोक्षणीपात्रेऽपि क्षिपेत्।।

यस मन्त्रले अग्निलाई आहुति दिनू र सबैमा प्रोक्षणी पात्रमा सुरो चोभनू ।

ॐ सोमायेति प्रजापतिर्ऋषिस्त्रिष्टुप्छन्दः सोमो देवता आज्यहोमे विनियोगः । ॐ सोमाय स्वाहा इदं सोमाय न मम । आज्यभागौ अग्नेरुत्तरतः ज्वालायाम् । प्रोक्षणीपात्रे प्रक्षिपेत् सर्वत्र ।

यस मन्त्रले अग्निको उत्तरतिरको ज्वालामा आहुति दिनू । प्रोक्षणी पात्रमा सुरोको टुप्पा चोभिदिनू ।

ॐ महाव्याहृतीनां प्रजापतिर्ऋषिः गायत्र्युष्णिगनुष्टुप्छन्दांसि अग्नि-वायुसूर्या देवता अग्न्याधाने विनियोगः ।

ॐ भूः स्वाहा इदमग्नये न मम । ॐ भुवः स्वाहा इदं वायवे न मम ।। ॐ स्वः स्वाहा इदं सूर्याय न मम ।

अब महाव्याहृतिमा अग्नि, वायु र सूर्यलाई विनियोग पढेर आहुति दिनू ।

पञ्चवारुणीहोमः- ॐ त्वन्नोऽअग्न इति वामदेव ऋषिरग्निवरुणौ देवते त्रिष्टुप्छन्दः प्रायश्चित्त-आज्यहोमे विनियोगः ।। ॐ त्वन्नोऽअग्ने वरुणस्यविद्वान्देवस्यहेडोऽअवयासिसीष्ठाः ।। यजिष्ठोवह्नितमः शोशुचानोव्विश्वाद्वेषांᳩ सिप्रमुमुग्ध्यस्मत् स्वाहा ।। इदमग्निवरुणाभ्याम् न मम।।

अब विनियोग सहित मन्त्र पढेर अग्नि वरुणलाई आहुति दिनू ।

ॐ सत्वन्नोऽअग्न इत्यस्य वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निवरुणौ देवते प्रायश्चित्त आज्यहोमे विनियोगः । ॐ सत्वन्नोऽअग्नेवमोभवोतीने दिष्टोऽअस्याऽउषसोव्युष्टौ ।। अवयक्ष्वनोवरुणꣳरराणोवीहिमृडीकꣳ सुहवोनऽएधि स्वाहा ।। इदमग्निवरुणाभ्याम् न मम ।।

अब फेरि विनियोग सहित मन्त्र पढेर अग्नि-वरुणलाई आहुति दिनू ।

ॐ अयाश्चाग्न इत्यस्य वामदेवऋषिस्त्रिष्टुप्छन्दोऽग्निर्देवता सर्वप्रायश्चित्तहोमे विनियोगः ।। ॐ अयाश्चग्नेस्यनग्नेशस्तिपाश्चसत्त्वमित्त्वमयाऽअसि ।। अयानोयज्ञंवहास्ययानोधेहिभेषज ꣳस्वाहा ।। इदमग्नये न मम ।।

अब विनियोग र मन्त्र पढेर केवल घिउको आहुति अग्निलाई दिनू ।

ॐ येतेशतमित्यस्य वामदेवऋषिस्त्रिष्टुप्छन्दो वरुण-सवितृ-विष्णु-विश्वे देव-मरुत्स्वर्क्का देवताः प्रायश्चित्तहोमे विनियोगः ।। ॐ येतेशतं

वरुणंयेसहस्त्रंयज्ञियाः पाशाविततामहान्तः ।। तेभिर्नोऽअसवितोत-
द्विष्णुर्विश्वेमुञ्चन्तुमरुतः स्वर्क्काः स्वाहा । इदं वरुणाय सवित्रे
विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः स्वर्क्केभ्यो न मम ।।

अब वरुण, सूर्य, विष्णु, विश्वेदेव, मरुत् र अर्कलाई आहुति दिनू ।

ॐ उदुत्तममिति शुन शेफऋषिस्त्रिष्टुप्छन्दो वरुणो देवता
पाशान्मोचने विनियोगः । ॐ उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳ
श्रथाय ।। अथाव्वयमादित्यव्व्रतेतवानागसोऽअदितयेस्याम स्वाहा ।
इदं वरुणाय न मम ।। एताः प्रायश्चित्तसंज्ञकाः ।।

विनियोग सहित यस मन्त्रले वरुणलाई आहुति दिनू ।

**प्रधानदेवताहोमः**- ॐ गणानान्त्वागणपतिꣳ हवामहेप्रियाणान्त्वा-

प्रधानदेवताहोमसूत्राणि-

गणेशो भास्करो देवी शिवो विष्णुश्च पञ्चमः । पञ्चायतननामानः कथिताः पञ्च देवताः।।
विनायकस्तथा दुर्गा वायुराकाश एव च । नासत्यदस्रौ पञ्चैते लोकपालाः प्रकीर्तिताः ।।
सूर्यः सोमश्च भौमश्च बुधो जीवश्च भार्गवः । शनी राहुश्च केतुश्च कथिताश्च नव ग्रहाः।।
ईश्वरश्च उमा स्कन्दो विष्णुर्ब्रह्मा शचीपति। यमः कालश्चित्रगुप्त इत्येता अधिदेवताः।।
अग्निरापो धरा विष्णुरिन्द्र ऐन्द्री प्रजापतिः । सर्पा ब्रह्मा क्रमात् प्रोक्ता नव प्रत्यधिदेवताः।।
इन्द्राग्नी यमनिर्ऋती वरुणो मरुतो विधुः । ईशो ब्रह्मा तथानन्तो दिक्पालाः परिकीर्तिताः।।
ध्रुवाद्या अष्टवसवो धात्रादित्यास्तु द्वादशः । वीरभद्राद्येकादश गौर्यादि मातृषोडशः ।।
आवहादिमरुत्सप्त विनायकविधी हरिः । रुद्रश्चार्कस्तथा प्रोक्तो वनस्पतिः क्रमेण हि।।
चतुःस्वस्ति पयः पञ्च षड्विष्णुर्देवद्वादशः । शान्तिर्द्वादश षड्प्रातः षड्वाताश्च क्रमेण हि।।
अनुडुत्संज्ञको ज्ञेयो होमकर्मणि वै ध्रुवम् । भगपञ्चेन्द्रियाः पञ्च वरुणा पञ्च एव च।।
गायत्री चैव सावित्री वाग्देवी गृहमातृकाः । अन्नपूर्णा महालक्ष्मीर्महारिष्टविनाशिनी ।।
चण्डी द्यौरालिका ज्ञेया वास्तुभूम्योश्च देवते । गैडुश्च क्षेत्रपालश्च ग्रामदेवस्ततः परम्।।
स्वर्गेन्द्रो वासुकिश्चैव मित्रलोकस्तथैव च । मान्धाता तीर्थराजश्च व्रतराजस्ततः परम्।।

प्रियपतिᳪ हवामहेनिधीनान्त्वानिधिपतिᳪ हवामहेव्वसोमम।। आहमजा निगर्ब्भधमात्त्वमजासिगर्ब्भधम् ।। ॐ गणपतये स्वाहा इदं गणपतये न मम ।।१।।

अब प्रधान देवताको हवनमा पहिले गणपतिलाई घिउ र चरुको आहुति दिनुपर्दछ ।

---

पुनर्दिक्पालका ज्ञेयास्तिथिनक्षत्रयोगकाः । वारश्च करणश्चैव वाता मेघाः समुद्रकाः ।।
नदीष्टकुलदेवाश्च स्थापिता देवताः क्रमात् । भैरवी भैरवो विन्ध्यवासिनी स्थानदेवताः।।
एषोह सर्वदेवेति शुक्रज्योतिस्तथैव च । पाण्डवाः पितरश्चैव वैश्वानरः क्रमेण च ।।
पूर्णपात्रं ततो दद्यात् बर्हिर्होमस्ततः परम् । गोभूरत्नहिरण्यानि रौप्यवस्त्राणि चैव हि ।।
देयानि द्विजमुख्येभ्यो यजमानैर्विशेषतः ।। इति होमसूत्राणि ।

---

१. यत्र मन्त्रः स्वाहान्तो भवेत् तत्र स्वाहाशब्दो न प्रयोज्यः । मन्त्रेणैव देवताय उक्तत्वात् पुनर्गणपतये स्वाहेति नोच्चारणीयः किन्तु स्वाहान्तं मन्त्रमुक्त्वा 'इदं गणपतये न मम' इत्युच्चारः कर्तव्य इति याज्ञिकानां समाचार एवमन्यत्रापि । मन्त्रोच्चारणाभावे तु ॐ गणपतये स्वाहेति वक्तव्यमेव ।

यस्मिन्मन्त्रे न पठितः स्वाहाकारो भवेद्यदि ।। स्वाहान्तेन प्रयोक्तव्यो होमे च प्रणवादिकः।। प्रयोगरत्ने ।

ॐ आकृष्णेनरजसावर्त्तमानोनिवेशयन्नमृतम्मर्त्यञ्च । हिरण्ययेनसवितारथेनादेवोयातिभुवनानिपश्यन् ।। ॐ सूर्याय स्वाहा इदं सूर्याय।।२।।

यस मन्त्रले सूर्यलाई आहुति दिनू ।

ॐ देवीर्द्वारऽइन्द्रवीड्सङ्घातेङ्क वीर्यामन्नवर्द्धयन् ।। आवत्सेनतरुणेनकुमारेणचमीवतापार्वाणङ्क रेणुककाटन्नुदन्तांवसुवनेवसुधेयस्यव्यन्तुयज।। ॐ देव्यै स्वाहा इदं देव्यै ।।३।।

यस मन्त्रले देवीलाई आहुति दिनू ।

ॐ नमः शम्भवायचमयोभवायचनमः शङ्करायचमयस्करायचनमः शिवायचशिवतरायच ।। ॐ शिवाय स्वाहा इदं शिवाय ।।४।।

–अत्र प्रणीतोदकस्पर्शः ।

यस मन्त्रले शिवलाई आहुति दिएर सुरोको टुप्पो प्रणीतामा चोभिदिनू ।

ॐ विष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोः स्यूरसिविष्णोर्ध्रुवोसि वैष्णवमसिविष्णवेत्वा ।। ॐ विष्णवे स्वाहा इदं विष्णवे ।।५।।

यस मन्त्रले विष्णुलाई आहुति दिनू ।

पञ्चलोकपालाः- ॐ गणानान्त्वागणपतिꣳ हवामहेप्रियाणान्त्वाप्रिय-पतिꣳहवामहेनिधीनान्त्वानिधिपतिꣳहवामहेव्वसोमम ।। आहमजा-निगर्ब्भधमात्त्वमजासिगर्ब्भधम् ।। ॐ विनायकाय स्वाहा इदं विनायकाय ।।

अब पंचलोकपालको आहुतिमा प्रथम विनाकायकलाई आहुति दिनू ।

ॐ अम्बेऽअम्बिकेम्बालिकेनमानयतिकश्चन ।। ससस्त्यश्वकः सुभद्रिकाङ्काम्पीलवासिनीम् ।। ॐ दुर्गायै स्वाहा इदं दुर्गायै ।।७।।

अब दुर्गालाई आहुति दिनू ।

ॐ ब्वायोयेतेसहस्रिणोरयासस्तेभिरागहि ।। नियुत्वान्त्सोमपीतये।।
ॐ वायवे स्वाहा इदं वायवे ।।८।।

यस मन्त्रले वायुलाई आहुति दिनू ।

ॐ ऊद्ध्वाऽअस्यसमिधोभवन्त्यूर्ध्वाशुक्राःशोचीᳬंष्यग्ने ।। द्युमत्तमासुप्रतीकस्यसूनोः ।। ॐ आकाशाय स्वाहा इदमाकाशाय।।९।।

यस मन्त्रले आकाशलाई आहुति दिनू ।

ॐ अश्विनोर्भैषज्ज्येनतेजसेब्ब्रह्मवर्च्चसायाभिषिञ्चामिसरस्वत्यभैषज्येन वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेणबलायश्रियै यशसेभिषिञ्चामि।। ॐ अश्विनीकुमाराभ्यां स्वाहा इदमश्विनीकुमाराभ्याम् ।।१०।।

यस मन्त्रले अश्विनी कुमारलाई आहुति दिनू ।

नवग्रहाः –ॐ आकृष्णेनरजसावर्तमानोनिवेशयन्नमृतम्मर्त्यञ्च ।। हिरण्य-येनसवितारथेनादेवोयातिभुवनानिपश्यन् ।। ॐ सूर्याय स्वाहा इदं सूर्याय ।।११।।

अब नवग्रहमा पहिले यो मन्त्रले सूर्यलाई आहुति दिनू ।

ॐ इमन्देवाऽअसपत्नꣳ सुवध्वम्महतेक्षत्रायमहतेज्यैष्ठ्यायमहते-जानरा ज्याऽयेन्द्रस्येन्द्रियाय ।। इमममुष्यपुत्रममुष्यैपुत्रमस्यैविशऽएषवो मीराजासोमोस्माकम्ब्राह्मणानाꣳराजा ।। ॐ सोमाय स्वाहा इदं सोमाय।।१२।।

यस मन्त्रले सोम (चन्द्रमा) लाई आहुति दिनू ।

ॐ अग्निर्मूर्द्धादिवः ककुत्पतिः पृथिव्याऽअयम् ।। अपाꣳरेताँसिजि-न्वति ।। ॐ भौमाय स्वाहा इदं भौमाय ।।१३।।

यस मन्त्रले भौम (मंगल) लाई आहुति दिनू ।

ॐ उद्बुध्यस्वाग्नेप्रतिजागृहित्त्वमिष्टापूर्तेसꣳ सृजेथामयञ्च ॥
अस्मिन्त्सधस्थेऽअद्ध्युत्तरस्मिन्विश्वेदेवायजमानश्चसीदत ॥
ॐ बुधाय स्वाहा इदं बुधाय ॥१४॥

यस मन्त्रले बुधलाई आहुति दिनू ।

ॐ बृहस्पतेऽअतियदर्योऽअर्हाद्युमद्विभातिक्रतुमज्जनेषु । यद्दीदयच्छवसऽऋतप्रजाततदस्मासुद्रविणन्धेहिचित्रम् ॥ उपयामगृहीतोसिबृहस्पतयेत्वैषतेयोनिर्बृहस्पतयेत्वा ॥ ॐ बृहस्पतये स्वाहा इदं बृहस्पतये ॥

यस मन्त्रले बृहस्पति (गुरु) लाई आहुति दिनू ।

ॐ अन्नात्परिस्रुतोरसम्ब्रह्मणाव्यपिबत्क्षत्रम्पयः सोमम्प्रजापतिः॥
ऋतेनसत्यमिन्द्रियंविपानꣳ शुक्रमन्धसऽइन्द्रस्येन्द्रियमिदम्पयोमृतम्मधु॥
ॐ शुक्राय स्वाहा इदं शुक्राय ॥१६॥

यस मन्त्रले शुक्रलाई आहुति दिनू ।

ॐ शन्नोदेवीरभिष्टयऽआपोभवन्तुपीतये ।। शंयोरभिस्रवन्तुनः।।
ॐ शनैश्चराय स्वाहा इदं शनैश्चराय ।।१७।।

यस मन्त्रले शनिश्चरलाई आहुति दिनू ।

ॐ कयानश्चित्रऽआभुवदूतीसदावृधः सखा ।। कयाशचिष्ठयावृता।।
ॐ राहवे स्वाहा इदं राहवे ।।१८।।

यस मन्त्रले राहुलाई आहुति दिनू ।

ॐ केतुङ्कृण्वन्नकेतवेपेशोमर्य्याऽअपेशसे ।। समुषद्भिरजायथा।।
ॐ केतवे स्वाहा इदं केतवे ।।१९।। इति नवग्रहाः ।।

यस मन्त्रले केतुलाई आहुति दिनू ।

अधिदेवताः –ॐ त्र्यम्बकंयजामहेसुगन्धिम्पुष्टिवर्द्धनम् ।। उर्वारुक-
मिवबन्धनान्मृत्योर्मुक्षीयमामृतात् ।। त्र्यम्बकंयजामहेसुगन्धिम्पतिवेदनम्।।

उर्वारुकमिवबन्धनादितोमुक्षीयमामुतः।।ॐ ईश्वराय स्वाहा इदमीश्वराय।।२०।।
अत्र प्रणीतोदकः स्पर्शः ।[1]

अब अधिदेवतामा पहिले ईश्वरलाई आहुति दिनू र सुरोको टुप्पा प्रणीताको जलमा चोभिदिनू ।

ॐ श्रीश्चतेलक्ष्मीश्चपत्न्यावहोरात्रेपार्श्वेनक्षत्राणिरूपमश्विनौव्यात्तम्।।
इष्णन्निषाणामुम्मऽइषाणसर्व्वलोकम्मऽइषाण ।।२१।।

ॐ उमायै स्वाहा इदमुमाय ।।

यस मन्त्रले उमालाई आहुति दिनू ।

ॐ यदक्रन्दः प्रथमञ्जायमानऽउद्यन्त्समुद्रादुतवापुरीषात् ।। श्येनस्य-

---

१- रोदन्तं राक्षसं पित्र्यमासुरश्चाभिचारिकम् ।। उक्त्वा मन्त्रं स्पृशेदापः आलभ्यात्मानमेव च।।

पक्षाहरिणस्यबाहूऽउपस्तुत्यम्महिजातन्तेऽअर्वन् ।।२२।। ॐ स्कन्दाय स्वाहा इदं स्कन्दाय ।।

यस मन्त्रले स्कन्दलाई आहुति दिनू ।

ॐ विष्णोरराटमसिविष्णोः श्नप्त्रेस्थोविष्णोः स्यूरसिविष्णोर्ध्रुवोसि।। वैष्णवमसिविष्णवेत्वा ।।२३।। ॐ विष्णवे स्वाहा इदं विष्णवे ।।

यस मन्त्रले विष्णुलाई आहुति दिनू ।

ॐ ब्रह्मजज्ञानम्प्रथम्मपुरस्ताद्विसीमतः सुरुचोवेनऽआवः ।। सबुध्न्याऽउपमाऽअस्यविष्ठाः सतश्चयोनिमसतश्चविवः ।। ब्रह्मणे स्वाहा इदं ब्रह्मणे ।।

यस मन्त्रले ब्रह्मालाई आहुति दिनू ।

ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहव शूरमिन्द्रम् ।। ह्वयामिशक्रं पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः ।। इन्द्राय स्वाहा इदमिन्द्राय।।

यस मन्त्रले इन्द्रलाई आहुति दिनू ।

ॐ यमायत्वामखायत्वासूर्यस्यत्वातपसे ।। देवस्त्वासवितामद्ध्वानक्तुपृथिव्याः सꣳस्पृशस्पाहि ।। अर्च्चिरसिशोचिरसितपोसि ।।२६।।

ॐ यमाय स्वाहा इदं यमाय । अत्र प्रणीतोदकस्पर्शः ।

यस मन्त्रले यमलाई आहुति दिएर सुरोको टुप्पो प्रणीताको जलमा डुबाउनू ।

ॐ कार्षिरसिसमुद्रस्यत्वाक्षित्याऽउन्नयामि ।। समापोऽअद्भिरग्मतसमोषधीभिरोषधीः ।।२७।। ॐकालाय स्वाहा इदं कालाय । अत्र प्रणीतोदकस्पर्शः ।।

यस मन्त्रले काललाई आहुति दिई सुरोको टुप्पो प्रणीताको जलमा चोभनू ।

ॐ इन्धानास्त्वाशतꣳहिमाद्युमन्तꣳसमिधीमहि ।। वयस्वन्तोवयस्कृतꣳ सहस्वन्तः सहस्कृतम् ।। अग्नेसपत्नदम्भनमदब्धासोऽअदाभ्यम् ।। चित्रावसोस्वस्तितेपारमशीय ।।२८।। ॐ चित्रगुप्ताय स्वाहा इदं चित्रगुप्ताय ।। अत्र प्रणीतोदकस्पर्शः ।। इत्यधिदेवताः ।।

यस मन्त्रले चित्रगुप्तलाई आहुति दिएर सुरोको टुप्पो प्रणीताको जलमा पखाल्नू ।

प्रत्यधिदेवताः- ॐ अग्निन्दूतंपुरोदधेहव्यवाहमुपब्रुवे ।। देवाँ ।।२।। ऽआसादयादिह ।।२९।। ॐ अग्नये स्वाहा इदमग्नये ।।

अब प्रत्यधिदेवताको हवनमा पहिले अग्निलाई आहुति दिनू ।

ॐ अप्स्वग्नेसधिष्टवसौषधीरनुरुद्ध्यसे ।। गर्भेसञ्जायसेपुनः।३०। अद्भ्यः स्वाहा इदमद्भ्यः ।।

यस मन्त्रले अद्भ्यःलाई आहुति दिनू ।।

ॐ स्योनापृथिविनोभवानृक्षरानिवेशनी । यच्छानः शर्म्मसप्रथाः ।।३१।।
ॐ भूम्यै स्वाहा इदं भूम्यै ।।

यस मन्त्रले भूमिलाई आहुति दिनू ।

ॐ इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ।। समूढमस्यपाꣳ सुरेस्वाहा।।३२।। ॐ विष्णवे स्वाहा इदं विष्णवे ।।

यस मन्त्रले विष्णुलाई आहुति दिनू ।

ॐ सजोषाऽइन्द्रसगणोमरुद्भिः सोमम्पिबवृत्रहाशूरविद्वान् ।। जहिशत्रूँ ।।२।। रपमृधोनुदस्वाथाभयङ्कृणुहिविश्वतोनः ।। उपयामगृहीतोसीन्द्रायत्वामरुत्वतऽएषतेयोनिरिन्द्रायत्वामरुत्वते ।।३३।। ॐ इन्द्राय स्वाहा इदमिन्द्राय ।।

यस मन्त्रले इन्द्रलाई आहुति दिनू ।

ॐ अदित्यैरास्नासीन्द्राण्याऽउष्णीषः । पूषासिघर्म्मायदीष्व ॥३४॥
ॐ इन्द्राण्यै स्वाहा इदमिन्द्राण्यै ॥

यस मन्त्रले इन्द्राणीलाई आहुति दिनू ।

ॐ प्रजापतेनत्वदेतान्यन्योविश्वारूपाणिपरिताबभूव ॥ यत्कामास्तेजुहुमस्तन्नोऽअस्तुवयꣳस्यामपतयोरयीणाम् ॥३५॥ ॐ प्रजापतये स्वाहा इदं प्रजापतये ॥

यस मन्त्रले प्रजापतिलाई आहुति दिनू ।

ॐ नमोस्तुसर्प्पेभ्योयेकेचपृथिवीमनु ॥ येऽअन्तरिक्षेयेदिवितेब्भ्यः सर्पेब्भ्योनमः ॥३६॥ ॐ सर्पेभ्यः स्वाहा इदं सर्पेभ्यः ॥

यस मन्त्रले सर्पहरूलाई आहुति दिनू ।

सबुध्न्याऽउपमाऽअस्यब्विष्ठाः सतश्चयोनिमसतश्चविवः ।।३७।।
ॐ ब्रह्मने स्वाहा इदं ब्रह्मणे ।। इति प्रत्यधिदेवता ।।

यस मन्त्रले ब्रह्मालाई आहुति दिनू । प्रत्यधि देवताको हवन सकियो ।

दिक्पालाः –ॐ त्रातारमिन्द्रमवितारमिन्द्रꣳ हवेहवेसुहवꣳशूरमिन्द्रम्।। ह्वयामिशक्रम्पुरुहूतमिन्द्रꣳ स्वस्तिनोमघवाधात्विन्द्रः ।।३८।। ॐ इन्द्राय स्वाहा इदमिन्द्राय ।।

अब दिक्पालहरूको हवनमा पहिले इन्द्रलाई आहुति दिनू ।

ॐ अग्निन्दूतम्पुरोदधेहव्यवाहमुपब्रुवे ।। देवाँ।।२।।ऽआसा-दयादिह।३९। ॐ अग्नये स्वाहा इदमग्नये ।।

यस मन्त्रले अग्निलाई आहुति दिनू ।

ॐ यमायत्वामखायत्वासूर्यस्यत्वातपसे ।। देवस्त्वासवितामध्वानक्तु-पृथिव्याः सꣳस्पृशस्प्पाहि ।। अर्च्चिरसिशोचिरसितपोसि ।।४०।। ॐ यमाय स्वाहा इदं यमाय ।। अत्र प्रणीतोदकस्पर्शः ।

यस मन्त्रले यमलाई आहुति दिएर सुरोको टुप्पो प्रणीतामा चोभिदिनू ।

ॐ असुन्वन्तमयजमानमिच्छस्तेनस्येत्यामन्विहितस्करस्य ।। अन्य-मस्मदिच्छसातऽइत्यानमोदेविनिर्ऋतेतुभ्यमस्तु ।।४१।। ॐ निर्ऋतये स्वाहा इदं निर्ऋतये । अत्र प्रणीतोदकस्पर्शः ।

यस मन्त्रले निर्ऋतिलाई आहुति दिई सुरोको टुप्पो प्रणीताको जलमा चोभिदिनू ।

ॐ वरुणस्योत्तम्भनमसिवरुणस्यस्कम्भसर्ज्जनीस्थोव्वरुणस्यऽऋतसदन्य सिवरुणस्यऽऋतसदनमसिवरुणस्यऽऋतसदनमासीद ।।४२।। ॐ वरुणाय स्वाहा इदं वरुणाय ।

यस मन्त्रले वरुणदेवलाई आहुति दिनू ।